


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः ९ | 15 DECEMBER 1971 | क्रमांकः १२



विरोधिकृत् मार्गशीर्षांकः

शकाब्दाः १८९३

मूल्यम् ४० पैसाः

# विषयसूचिका







# निद्रां जहीहि

निद्रां जहीहि जहि रे
देश–
भद्रतो प्रद्रुता हे ॥
क्षुद्रपाकिस्थान काद्रवेया विषं
सद्रुतं प्रवमन्ति रे
भारत–
भद्रतां परिरक्ष रे ॥ ॥ निद्रां ॥
कान्दिशीकौघं प्रविद्राव्य निर्दयं
कलुषयितुमद्यता रे !
भारतं
कबलयितुमुत्सुका रे ! ॥ निद्रां ॥
प्राक्पश्चिमप्रान्तपरिधिं समुल्लंघ्य
अस्मज्जनान् घ्नन्ति रे !
पापिनः
दुस्साहसं कुर्वते ॥ ॥ निद्रां ॥
ढक्कां विनिर्भिद्य लाहोरमाक्रम्य
रावपिंडीं च दह रे !
भारत !
प्रद्रावयारिनिचयान् ॥ ॥ निद्रां ॥
भूचराः खेचरा जलचरा वाहाश्च
पाकं निरुन्धन्तु रे
भारत !
परभीकरा भान्तु रे ! ॥ निद्रां ॥

# सम्पादकीयम्

**कृते च प्रतिकर्तव्यमेष धर्मस्सानातनः**

ज्वलति चलितेन्धनोग्निः विप्रकृतः पन्नगः पणां कुरुते ।
प्रायः स्वं महिमानं क्रोधात् प्रतिपद्यते हि जनः ।।

भारतदेशः सत्याहिंसाधर्म– त्रिगुणितसूत्रदृढबद्ध एव सदा वर्तते इति मत्वा अन्यैः तदवमाननायारब्धं । स्वतश्शान्तस्वभावैरस्माभिः हृदयवेदनया साकमेव अवमानाश्च सोढाः । भारतदेशविभजनमंगीकृतं, परप्रान्तस्वजनहिंसा उपेक्षिता, परकृतं स्वीयदेशांचलाक्रमणं विस्मृतं, शठे शाठ्यविधया परदण्डनार्थं अस्मद्विक्रमसंपादितश्च भूभागः प्रत्यर्पितः । एवं अग्रराज्यनामककबन्धहस्तग्रस्तैरस्माभिः कोटिशः भारतीयाः परहस्तिताः महच्च भूमण्डलं अन्यवशीकृतं ।

एवमपि अतृप्ताः ते वराका सीमाविवादानुत्थापयन्त स्मा-ऽऽसन् । रोगेणैव रुवति श्रृगाले तालफलपतनवत् पूर्वपाकिस्थान-कान्दिशीकाः भारतप्रान्तेषु प्राद्रवन् । भारतसर्वकारेण बहुधा तत्प्रतिनिवर्तनाय विज्ञापितं पाकिस्थानं "निन्दति कंचुकमेव प्रायश्शुष्कस्तनी नारी"तिवत् तत्र भारतमेव कारणं निर्दिश्य अनिन्दत् । भारतसर्वकारेण जयप्रकाशनारायणादिमहानायकैश्च कान्दिशीकभारभूयस्तां विज्ञापितान्यपि प्रपंचराज्यानि बांग्लादेशनिहिंसनं

तन्मूलककांदिशीकप्रवाहं चोद्दिश्य नैवालोचयन्। प्रत्युत हिंसा-प्रोत्साहनाय आयुधाहारादीनि समार्पयन् पाकाय। सुरक्षापरिषदपि गजनिमीलिकां प्रादर्शयत्। एतया परिस्थित्या पाकश्च अमुमेव भारताक्रमणायावसरं अमनुत भारतसीमायां स्वसेनां समवस्थापयच्च। अद्य वा श्वो वा भारतं गिलिष्यामीति स पाकः पातकी चीनामेरिकासमुत्साहितः समुदयुंक्त।

तादृशे विपत्समये रष्यादेशः भारतस्य अभयहस्तमदर्शयत्, न तावदेव प्रपंचराज्यान्यचेतयत् भारताक्रमणाय यदि प्रयतेध्वं तर्हि सुखेन न बहिर्यास्यथेति। तेन हुंकारेण भीतः दुष्टसमाजः यद्यपि पश्चात्पदं निदधे तथापि पाकस्य आशा यथापूर्वमेवासीत्।

अगत्या भारतसर्वकारः सर्वसन्नाहेन स्वसीमाप्रान्तरक्षण-जागरूकतामवालम्बत। पाकश्च भारतसेनापसारणाय स्वमित्रैः भारतं निरबध्नात्। परन्तु बहुवारं विनाशकरपरबुद्धिक्लिष्टः भारतसर्वकारः तन्मतं नांग्यकरोत्।

अन्ते दुस्साहसी याह्यः भारतोपरि युद्धायोपाक्रमत। परन्तु धर्मरक्षिताः भारतयोधाः शत्रुभिः प्रयुद्धय प्राक्पश्चिमपाकिस्थानयोः पराक्रान्तकाश्मीरभूभागे च पुरोऽगमन्। बांग्लादेशश्च विमोचित-प्रायः समभवत्। नौकाविमानसंबन्धखंडनात् मुक्तिवाहिन्याः सहायात् प्रजानां सहकाराच्च अव्याहतगतिः भारतसेना परितः आक्रम्य बांग्लादेशं ढाकां निरुणद्धि। द्वित्रदिनेषु बांग्लादेशसर्वकारः ढाकामेव स्वीयराजधानीत्वेनाधिस्थास्यति।

भारतसर्वकारः बांग्लादेशप्रजास्वातंत्र्यरक्षणाय युद्धयति न तद्राज्याक्रमणायेति आदर्शशुद्धिः।

पश्चिमपाकिस्थानेपि भारतयोधानां शौर्यस्य निर्णिरोधः प्रसरः प्रस्तूयते यतः तत्रापि महान् भूभागः आत्मायत्तः आरचितः ।

इदानीं पाकः उभयसैन्योपसंहरणार्थं मित्रमुखेन याचते । तन्मित्राणि च पाकपक्षपातिनः बांग्लादेशसमस्यां अनुद्भाव्य शान्ति-सन्धानाय विफलयत्नं आचरयन्ति ।

इदानीं भारतमपि राज्यत्वेन भावयन्ति प्रपंचराज्यानि इतः पूर्वं च एडमूकं मन्वते स्म । आकृष्टसटः केसरीव भारतदेशः प्रपंच-भयंकरः अद्य संभाव्यते । अदशन् वृश्चिकः खलु इद्रकीटः संभाव्येत ।

अत्र सर्वसंदर्भेषु नरस्य नारायण इव भारतदेशस्य आपन्नि-वारणजागरूकः रष्यासर्वकारः बहुशः प्रशंसामर्हति ।

विजयताम् भारतदेशः !

विमुच्यतां बंगालक्लेशः !!



# शान्तोऽपि नवमो रसोऽस्ति

ले० श्री को श्रीनिवासशर्मा, कुम्भकोणम्

नियतिकृतनियमरहितां ह्लादैकमयीं अनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवे र्जयति ॥

नमो विद्वन्मण्डलेभ्यः । जनोऽयं येन केनापि प्रकारेण संस्कृतसेवाविधौ कोऽपि भागः स्वीकर्तव्य इत्याशाप्रेरितः लेखेनानेन समुपसेवितुं मुद्युक्तोऽस्ति । विदुषीशेमुषीनिकषोपलै र्विद्वन्मण्डलै-र्भवद्भिः लेखमिमं पठित्वा सादरमनुग्राह्योऽयं जन इति सविनयं साञ्जलिबन्धं चाभ्यर्थयते ।

तत्र तावत् भगवता भरतमुनिना सूत्रमिदं सूत्रितं यथा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"रिति । सूत्रेणानेन उररीकृतस्य वाङ्मयस्य सर्वस्याप्यात्मभूतस्य ब्रह्मानन्दसब्रह्म-चारिणो रसस्य सहृदयहृदयाह्लादकत्वं मतान्तराभिमतत्वं अनुभव-सिद्धत्वं च निरूप्यते ।

ननु "अष्टौ नाट्ये रसाः स्मृताः इति नियमात् नवमः शान्तो रसो न संभवति" इति चेत्तर्हि शान्तरसाभाववादिनः पूर्व-पक्षिण एवं प्रष्टव्याः– "किं शान्तस्थायिन एवानिरूपणान्मुनिना शान्तरसाभावः भवतामिष्टः? उत शान्तरससामग्रीवैधुर्यात्तदभावः? आहोस्वित् सहृदयहृदयाह्लादकत्वाभावात्तदभावः? अथवा अष्टसु रसेषु यस्मिन् कस्मिन्नपि रसेऽन्तर्भावात् पृथगस्तित्वाभावात्तद-

भावः? यद्वा चतुर्ष्वपि पुरुषार्थेषु अन्यतमस्यापि पुरुषार्थस्याभावात्? अत एव फलाभावात्तदभावो विवक्षितः?" इति ।

१. य आद्यः पक्षः "मुनिना शान्तस्थायिन एवानिरूपणात् तदभाव" इति न स पक्षः सुतरां समीचीनः । निर्वेद एव शान्तरसस्य स्थायिभाव इति भगवता मुनिनाङ्गीकृतत्वात् । तथाहि-श्रीमम्मटाचार्यैः स्वकाव्यप्रकाशे एवमुक्तम् –

"निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽपि उपादानं व्यभिचारित्वेऽपि स्थायित्वाभिधानार्थम् । अतः निर्वेदस्थायिभावः शान्तोऽपि नवमोऽस्ति रसः" इति । आनन्दवर्धनाचार्या अपि स्वध्वन्यालोके अमुमेवार्थं साधयन्ति । तद्यथा "तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणः रसः प्रतीयत एव" इति । एतव्द्याख्यावसरे अभिनवगुप्तपादाः व्याचक्षते यथा "न च निर्वेदस्तृष्णाक्षयात्मा शमपर्यायो न सुखरूप इति शङ्कनीयम् । वैयासिकानामविद्यानिवृत्तिवदस्यापि सुखरूपत्वसंभवात् । अत एवोक्तम् "यच्च कामसुखं लोके यच्च दिव्यम् महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां" इति । एतेन शान्तस्थायिनः निर्वेदस्य मुनिनाङ्गीकृतत्वात् अस्ति शान्तो रसः ।

२. यदुक्तं विभावादिसामग्रीवैधुर्यान्नास्ति शान्तो रस इति तदपेशलम् । वैराग्यादिसमग्रसामग्रीसद्भावादस्ति शान्तो रसः । तथाहि, वैराग्यपरमेश्वरानुग्रहप्राचीनपुण्यपरिपाकसत्पुरुषसेवावेदान्तविचारादयो विभावाः, यमनियमादयोऽनुभावाः, मतिस्मृतिचिन्तधृतिवितर्कादयो व्यभिचारिण इति । एवं च विभावादिसकलसाधनसौलभ्यादस्ति शान्तो रसः ।

३. न च सहृदयहृदयाह्लादकत्वाभावात् । अत एवाश्लाघ्यत्वात् शान्तरसाभाव इति, न तद्विचारसहम् । कामक्रोधादिकलुषीकृतमनसां सांसारिकानां अचर्वणीयत्वेन अश्लाघ्यत्वेऽपि वीतरागाणां चर्वणीयत्वेन श्लाघ्यत्वात् । यदि रागद्वेषदूषितान्तःकरणानां केषांचिदश्लाघ्यत्वेन शान्तो रसो नास्तीत्युच्येत तदा वीतरागाणां अचर्वणीयत्वेन शृङ्गाररसस्यापि अभावापत्तिः । अतः वीतरागाणां चर्वणीयत्वेन श्लाघनीयत्वादस्ति शान्तो रसः ।

४. न च यद्यपि शान्तो रसः अनुभवसिद्धस्तथापि तस्याष्टसु रसेषु यस्मिन्कस्मिन्नप्यन्तर्भावात् पृथगस्तित्वाभाव इति वाच्यम् । न च शृङ्गारे तदन्तर्भावः, शृङ्गारशान्तयोः परस्परविरुद्धत्वात्, अत एवाप्रसक्तत्वात् । रागिभिश्चर्व्यते शृङ्गारः वीतरागैश्च शान्तः । न च वीरे तदन्तर्भावः कर्तुं शक्यः । तस्याभिमानमयत्वेन व्यवस्थापनात्, शान्तस्य च अहंकारप्रशमैकरूपतया स्थितेः । ननु दानाद्युपाधिना त्रिविधो वीरः । तदुक्तं मुनिना– "दानवीरं युद्धवीरं धर्मवीरं तथैव च । रसं वीरमपि प्राह ब्रह्मा त्रिविधसंमत"-मिति । अतः धर्मप्रधाने वीरे शान्तस्यान्तर्भावः संभावित इति चेन्न । उत्साहस्याहमेवंविध इत्येवंप्राणत्वेन अभिमानमयो वीरः, सर्वाहंकारप्रशमैकमयः शान्तः । एवमत्यन्तवैजात्यादनयोः न वीरे शान्तस्य अन्तर्भावः । न च दयावीरे तस्यान्तर्भाव इति चेन्न । दयावीरस्याप्येवंविधत्वे शान्तस्यैव नामान्तरकरणमिति । अतः अष्टसु रसेष्वनन्तर्भावादस्ति शान्तोऽपि नवमो रसः । न च तदीया पर्यन्तावस्था वर्णनीया येन सर्वचेष्टोपरमात् अनुभावाभावेऽप्रतीयमानता स्यात् । शृङ्गारादेरपि फलोपलब्धौ अनिर्वर्णनीयतैव ।

५. नापि चतुर्षु पुरुषार्थेषु एकस्यापि पुरुषार्थस्याभावात्, अत एव फलाभावात् तदभावः शङ्कनीयः । चतुर्थपुरुषार्थस्य मुक्ते-

रेतदेकसाध्यत्वात् । उक्तं च भावप्रकाशे "सर्वप्रकारैः संपूर्णकामः संतुष्टमानसः । प्रप्नोति मुक्ति चरमे शान्तेनैव रसेन सः" इति ।

लोचने चोक्तम्– मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः, स चायं शान्तरसः इति । एवं चायं संपिण्डितार्थः– निर्वेदस्य स्थायिभूतस्य सद्भावात्, विभावादिसमस्तसामग्रीसद्भावात्, सहृदयहृदयाह्लादकत्वात्, रसान्तरेष्वनन्तर्भावात्, चतुर्थपुरुषार्थस्य मुक्तेरेतदेकसाध्यत्वात्, अत एव प्रकृष्टफलसद्भावात् अस्ति शान्तोऽपि नवमो रसः ।

शान्तरसस्योदाहरणं यथा–

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ।।

सर्पपुष्पमालयोः, दृषत्कुसुमशयनयोः, मणिलोष्टयोः, शत्रुसुहृदोः, तृणस्त्रीसमूहयोश्च समा, उपादेयत्वानुपादेयत्वाभावेन उदासीना भेदरहिता दृष्टिः यस्य मम । जगतो मिथ्यात्वेन रागद्वेषयोरभावात्। अहिरिव हारोऽपि हेयः न तु उपादेयः । तादृशस्य शिवनामभावितान्तरङ्गस्य मम दिवसा यान्ति । अत्र मिथ्यात्वेन परिभाव्यमानं जगदालम्बनं, तपोवनाद्युद्दीपनम्, अहिहारादिषु समदर्शनमनुभावः, मतिधृतिहर्षाः संचारिणः । अतः अत्रोदाहरणे विभावादिसमग्रसामग्रीसद्भावात् शान्तो रसः ।

तथा च सिद्धमेतत् "शान्तोऽपि नवमो रसोऽस्ति" इति ।

——:o:——

# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

शिष्यः - वृक्षगणः कस्मादुत्पद्यते ?

गुरुः - बीजादुत्पद्यते । अंकुरजननयोग्यतार्थं त्वचा सार्धं बीजं रक्षितं भवति । प्रत्येकतो बीजाज्जात्यनुसारेण नानाविधास्तरवो जायन्ते । बीजन्तु तावत् द्व्ययुतप्रकारं विदितमस्ति । इतोप्यधिकप्रकारं वर्तत इत्यनुमीयते । वपने कृते बीजादुत्पन्नमूलमधोभागे गच्छति, काण्डभागस्तूर्ध्वमुत्तिष्ठति ।

शिष्यः - केन रूपेण ते वृद्धिं लभन्ते ?

गुरुः - पवनवर्षणनीरग्रीष्मोर्वरामृत्तिकाभिर्मूलोपमूलरन्ध्रेषु यद्रसः प्रविशति तेनैव ते वृद्धिं लभन्ते ।

शिष्यः - वृक्षाणां त्वग्भिः पत्रैश्च किं प्रयोजनम् ?

गुरुः - आघाततो रक्षणमुत्पन्नरसेन च संपोषणमित्येताभ्यां तेषां त्वक् समभवत् । नीहारवर्षणनीरग्रहणार्थं तेषां च पत्राण्यभवन् ।

शिष्यः - एकस्मिन्नेव वृक्षे नानापत्राणि सन्ति । तेषु पत्रेषु नानाविशेषा दृश्यन्ते ?

गुरुः - तत् सत्यम् । विचित्रशक्तेः परमेश्वरस्य सृष्टौ नानाविशेषास्सन्ति । तत्रापि जगतीमध्ये प्रायो वस्तुद्वयं सर्वतः

समानं लभ्यते इत्यभिप्रायार्थं उपरिभागे जलावस्थानेन यथा तेषां कापि हानिर्न भवति तदर्थं पत्राणामुपरिभागस्तैलाक्तवत् परिष्कृतो भवति । एवं नीहारनीरग्रहणयोग्यतार्थं पत्राणां पृष्ठभागोऽपि परिष्कृतो रूक्षश्च भवति ।

शिष्यः - प्राणिनां हितार्थं समुत्पन्ना अपि ये वृक्षा न फलन्ति तैः प्रयोजनं किम् ?

गुरुः - पश्य च, सर्वे वनवृक्षाः अतिसुदृश्या भवन्ति । पथिकानां सन्तापप्रशमनाय च स्निग्धां छायां वितन्वन्ति । अपरञ्च गृहादिरचनायां बृहन्नौकाया गुणवृक्षकनिर्मितौ च तथा कृषिकर्मगृहोपकरणौषधसंपादनार्थं चर्मकाराणां चर्मादिरञ्जनशिल्पकर्मपाकादिनिर्वाहार्थं च वन्यानां तरूणां महोपकारकत्वमस्ति ।

शिष्यः - हे महाशय, वृक्षतो यदेतावत्प्रयोजनं तन्नाहं ज्ञातवान् । किं च, येषां फलानि जायन्ते तानेवाऽहं भद्रान् अकथयिष्यम् ।

गुरुः- सन्ति फलिनः कति कति वृक्षाः । तेषां मध्ये वा कतिविधाः सन्ति । पश्य । आम्रबीजपूरनारङ्गकमलाख्यजम्बीरश्रीफलपनसकृष्णबीजादीनस्माकमाहारार्थं रक्षणसुखहितास्वादग्रहतृप्त्यर्थं च ग्रीष्मसमये तृष्णोपशमनार्थमपि य एतान्समसृजत् स हि कीदृक् दयामयोस्माऽकं पिता! सर्वमेतन्मनसि कर्तुमुचितं भवति यदस्माकमुद्याने व्यञ्जनार्थं कतिविधशाकमूलादयो भवन्ति । पश्य च, कपीतिपुष्पकपीति च लोकप्रसिद्धशाकं मूलकं शालगमाख्यं गृंजनं कन्दसूरणे वार्ताकालाबुपटोलफलं चैवमादिकं नानाविधं विहितम् ।

शिष्यः - अस्मिन् देशे के के वृक्षा अतिकार्योपयोगिनो भवन्ति ?

गुरुः - नारिकेळवंशकदळीप्रभृतयो वृक्षा महाप्रयोजनार्हा भवन्ति। पश्य च, नारिकेळपत्रसिरया सम्मार्जनी क्रियते, तदीयफलत्वग्भिश्च भोजनपत्राधारादिः परिष्क्रियते। तत्फलं तु नानाकर्मोपयोगि भवति, यतस्तत्सम्भवजलं पीयते। भोजने तैलविशेषनिष्पादने च तत् सस्यमुपादेयं भवति। तत्फलत्वग्भिरपि बृहती रज्जुर्जायते, एवमपरकर्मोपयोगि च भवति। वंशैर्नानाकर्माणि क्रियन्ते। पश्च च, तैः गृहादिः प्रसूयते। शूर्पादिगृहोपकरणं च निष्पाद्यते, क्रियन्ते च नानाविधानि यन्त्राणि। कदळ्याः पत्रे च पाठशालायां बालकैर्लिख्यते, पात्रान्तराभावे तत्पत्रैर्मनुष्यैर्भुज्यते च, तत्काण्डगर्भसस्यैर्व्यंजनं निष्पाद्यते, एवं सर्वदेशीयलोकैः प्रायस्तत्फलान्युपादेयानि मत्वा भक्ष्यन्ते च।

शिष्यः - केन रूपेण वृक्षाणां फलान्युत्पद्यन्ते ?

गुरुः - प्रायस्सर्वेषां तरूणां पुष्पोत्पन्नावयवतः फलानि जायन्ते। किन्तुजनरञ्जनवृक्षस्यार्थात् भूटेति प्रसिद्धवृक्षस्य यस्मिन् प्रदेशे पुष्पं नोजायते तत्प्रदेशे फलं जायते। एतद्विना प्रायः सर्वेषां वृक्षाणां पुष्पेभ्य एव फलानि जायन्ते। परन्तु अश्वत्थवटप्रभृतीनां पुष्पाभावेपि फलं जायते। किंच सुखाशनशीर्णवृन्तकर्कटीप्रभृतीनां पुष्पेप्यजाते प्रथमं फलं दृष्टं भवति।

शिष्यः - केन रूपेण फलं रक्षितं भवति ?

गुरुः - कृत्स्नं फलं त्वग्भिः संरक्षितं भवति। किन्तु सर्वस्मिन् विजातीयफले नैकरूपा त्वग्भवति। पश्य, शीर्णवृन्तकर्कटी-

सुखाशनादिफले स्थूला त्वग्भवति । अपरेषु फलेषु सूक्ष्मा त्वग्भवति, यानि फलानि भूमौ स्थित्वा वर्धन्ते । यदि तेषां विपुला त्वक् नाभवत्, तर्हि कीटोपहतानि भवेयुः। एवं यदि द्राक्षाफलानां त्वचि सुखाशनादिवत् स्थौल्यमभवत् तर्हि निष्पीडनचोषणयोग्यानि तत्फलानि न भवेयुः ।

शिष्यः - फलानां कुत्र बीजानि तिष्ठन्ति ?

गुरुः - वृक्षोत्पादने बीजानामत्यावश्यकत्वं,एतस्मादेव फलाभ्यन्तरे समुचितस्थाने बीजानि रक्षितानि भवन्ति । कतिचिद्बीजान्यष्टिमध्ये निभृतं तिष्ठन्ति, कतिचिच्च त्वङ्मध्ये तिष्ठन्ति ।

शिष्यः - एतदतीवाश्चर्यं, रक्षार्थं बीजारोपणार्थं च मनुष्याणां यत्नाभावेपि बहुविधा वृक्षा लताश्च कथं न विनश्यन्ति ?

गुरुः - अत्र च परमेश्वरस्य महत्कौशलं प्रकाशते । यतो हि मानवानां चेष्टामन्तरेण कति कति बीजानि संरोपितानि भवन्ति, कति बीजानि च नदीनदवेगेनोन्मज्जमानानि जन्मवृक्षाद्दूरे रोपितानि भवन्ति । कतिचिद्बीजानि वायुनोड्डीयमानानि समुचितस्थाने रोपितानि भवन्ति । खगकाष्ठबिडालादयो यानि नानाबीजानि भक्षयन्ति तानि च तेषामुदरगतानि भूत्वाऽपि नो नश्यन्ति । परन्तु तत्पुरीषसंपृक्तानि यत्र यत्र पतन्ति, तत्र तत्रैव रोपितानि भूत्वा वृद्धिं लभन्ते । किंच गल्धमूषिकपिपीलिकाकृमिप्रभृतयो यत्र भूमौ बिलं कुर्वन्ति, तत्र वायुवेगेन यद्बीजमुड्डीयमानं पतति, तत् तत्रैव रोपितं सत् वृद्धिं लभते ।

(सशेषम्)

—:o:—

# धूम्र समस्या– निवारणोपायाश्च

यदा यूरोपे बाष्प-यन्त्रस्य आविष्कारः तथा भूगर्भस्थ कोयला इंधनस्य उत्खननं आरब्धं तदा केनापि न चिंतितमासीत् यदेतेषां यंत्राणाँ धूम्रः अस्याः पृथिव्याः संपूर्णं वातावरणं पूरयिष्यतीति । कतिचित् वर्षाणि यावत् वैज्ञानिकाः चिन्तयन्तः आसन् यद् धूम्रः तु वनस्पतीनां उपकारकः भवेत्, ताः एव धूम्रं स्वीय कोशिकासु संश्वस्य पुनः प्राणवायुं निःश्वसेयुः । परं ततः उत्तरकाले गत ७० वर्षेषु सर्वत्र यथा गत्या उद्यमाः विविधाः निर्माणिकाः विविधानि यानानि– वस्त्र निर्माणिकाः लोहादिधातुनिर्माणिकाः, रैलसंयानानि-मोटर-विमान-बाष्पनौका इत्यादीनि– वृद्धि गतानि प्रत्यहं वर्धन्ते च, एतैरेव एषा समस्या वैज्ञानिकानां कृते आकलनीया कृता ।

वायुद्रावकसंयंत्रेषु वायुं द्रवे रूपांतरितं कृत्वा यदा तस्य विश्लेषणात्मकंपरीक्षणं क्रियते तदा कियता प्रमाणेन के के वायवः मिश्रिताः सन्ति वातावरणे तदुद्घटितं भवति । सामान्यतः वयं एतान् नैव ज्ञातुं पारयिष्यामः ।

लगुडस्थ धूम्रस्तु विशेषविषकरः नास्ति । परंतु खनिज-इंधनानां (कोयला, तैलं, वायुः) धूम्रेतु कार्बनडायॉक्सईड सहैव सल्फरडायॉक्सइड तथा कार्बन मोनो ऑक्साइड, तथा कज्जल - कणाश्च भवन्ति । एष धूम्रः विषकरः । एते कज्जलकणाः तथा वायवः वातावरणस्थं तापं अपि वर्धयन्ति । एते सूर्यप्रकाशं

रुन्धन्ति। विविधधात्वीयवस्तूनि यंत्रांश्च एते अधिकवेगेन जरयन्ति। कज्जलकणानां वृद्धया एव मनुजादिषु कामवासना वर्धते। अस्मत्पूर्वजैः ऋषिभिः कलियुगं कृष्णं युगमिति कथितं तत्सत्यं एव। यौरोपीयाः रेलमार्गाः एतैरेव प्रतिवर्षं अधिकां हानिं प्राप्नुवन्तीति कथ्यते। धूम्रः वनस्पतिजगतः परिवर्तन - क्षमतां अतिक्रम्य वर्तते सद्यः। तथैव सल्फरडायॉक्साईड तु तासां कृतेऽपि हानिप्रदः एव भवति। एभिः वायुभिः जलचराः च सागरांतर्गताः वनस्पतयश्च दिनेदिने ह्रसमाज्ञाः इति कथ्यते।

वयं विविधाः सुखसुविधाः प्राप्य हृष्टाः विज्ञानं वैज्ञानिकांश्च अभिनंदामः। परं एते उद्यमाः सुखैः सहैव कियतीः दुःखदुर्विधाः निर्मान्ति तन्नजानीमः। ज्ञाते सति वयं ताः सुविधाः भीषणदुःखोत्पादिकाः एव मत्वा तिरस्करिष्यामः। यः ॲल्युमिनियम् धातुः गृहे गृहे विविधवस्तूनि चमचमायति विविधवर्णरञ्जितान् पुटान् ददाति, तस्य खनिजानां शुद्धीकरणे नूनं धातोः प्रतिटनं उत्पादनेन सह १०५ टनमितः उत्पाद्यन्ते कार्बनडायॉक्साईड, कार्बनमोनोऑक्साईड इत्यादि विषकराः वाहवः पदार्थाः। येषु यानेषु वयं सुखं महागत्या विचरामः तान्यपि प्रतिक्षणं अपरिमितं धूम्रं वमन्ति। देशदेशान्तरं गच्छन्ति विमानानि दृष्ट्वा तेषु प्रवसन्तः वयं प्रमोदामहे, तानि तु सर्वत्र वातावरणं दूषयन्ति। इमानि रेलसंयानानि च सर्वत्र कज्जलकणान् प्रसारयन्ति धावन्ति। एतानि केवलं उदाहरणमात्राण्येव दर्शितीनि। सर्वैः निर्मित धम्रस्य गणना तु भयोत्पदिका एव।

अतः उपर्युयरि सुखाभासप्रदाः उद्यमाः, संयानानि च दुःखोत्पादकान्येव संति।

कैश्चित् वैज्ञानिकैस्तु निवेद्यते यत् आगामि ३० वर्षाभ्यन्तरे जगति मनुजाःश्वासोच्छ्वासार्थेऽपि शुद्धं वायुं न लब्धुं पारयिष्यंति। तथैवं तृषाशमनार्थे शुद्धं जलमपि दुर्लभं भविष्यति। एतैरेव जीवन्ति वनस्पतयः फलवृक्षाः सस्यानि च एतान्यपि न्यून-प्रमाणेन तथैव विषाक्तान्येव अस्मद् भोजने आगमिष्यंति। तेन तु मानवजातेः सहैव पशुपक्षिजलचरादिसमस्तजीवसृष्टेः विनाशः अपि प्रसज्येत।

एतैर्विषकरैः वायुभिः निर्मितानां प्रचलितकालीनसमस्यानां तथैव आगामिनां भीषणापदां निवारणार्थे कैश्चित् वैज्ञानिकैः एतेषां इंधन-यन्त्राणां उपयोगः त्वरया सर्वथैरोद्धव्यः इति उप-दिश्यते। परं पुनः का गतिः भवेत्, अस्मद् -अभ्यासे आगतानां सुखसुविधानां ? वयं ताः त्यक्तुं न उत्सहामहे, परन्तु ताभ्यः आग-च्छन्ति दुःखानि नैव वाञ्छामः। सर्वत्र सर्वेषु राण्ट्रेषु सर्वकाराः स्वीयान् जनान सुखिनः कर्तुं उद्यताः, औद्योगिकत्वं प्रवर्धयितुं संसिद्धाः संति। अतः वैज्ञानिकाश्च विचारशीलाः इतरे जनाश्च अस्याः संस्कृतेः भवितव्य-विषये चिंतामग्ना दुर्विधा वर्तन्ते।

कैश्चित् पुनः इंधनयंत्राणां स्थाने केवलं विद्युद्यंत्राणां सर्वत्र उपयोगः कर्तव्यः, तेन च धूम्रं विनाऽपि वयं तान्येव सुखानि प्राप्स्याम इति सूच्यते। यूरोपे यथा तथैव अत्र च विद्युत्-शक्त्या चलन्ति रेलसंयानि सन्त्येव। तेषां संचालने विद्युत्-प्रवहणार्थे च विविधप्रकारकाः ताम्रडोरिकाः तंतवश्च भूरिप्रमाणेन योक्तव्याः भवन्ति (एतस्याः आपदः निवारणार्थे एव अस्मद् - सर्वकारेणापि डिझेल-चल-रेल संयंत्राणि आयातितानि संति। तादृशानि यूरोप-अमेरिकादिराष्ट्रेषु बहुसंख्यानि प्रधावन्ति ) परं अद्य किल

कैश्चित् तत्रस्यैः पुनः विद्युत्-चल-मोटर-बसयानानां विकासे प्रयत्यते । तैः नगरेषु वातावरणं शुद्धं तिष्ठेत् ।

गत - त्रिशताब्दि वैज्ञानिकैः अस्मद्भ्यः एतानि विविधानि यंत्राणि प्रादीयन्त, अद्यपर्यंतं यैः तेषां गुणगानैः आकाशं पूरितं आसीत् तेः एव अद्य अस्मत्पुरतः तैर्निर्मितानां समस्यानां भीपणसंकटानां प्रतिवेदतं प्रस्तुवंति । न जाने अद्य विद्युत् - चल - यानादियंत्रसाधनानां यः पुरस्कारः क्रियते स एव काले गते अन्यां कां समस्यां उत्पादयेत् । आगामिनि काले कश्चिद् वैज्ञानिकः एव विद्युद्-यन्त्रैः निःसृष्टाभिः विद्युच्चुंबकीयलहरीभः मानवहृदय-मस्तिष्कस्नायुमज्जादिषु क्रियमाणानां सूक्ष्माघतानां, तैश्च उद्भाव्यमानानां शारीरक - मानसिक - आधिव्याधीनां, तथैव पृथिव्याः अन्यपदार्थेषु कृतानां विकाराणां दीर्घं प्रतिवेदनं गृहीत्वा अस्मत्पुरः उपस्यापयिष्यति ।

विद्युच्छक्तेः उत्पादनं अपि कैः साधनैः भवति? काचित् जल-प्रपातैः, काचित् पवनचक्रैः, परंतु बहुलांशेन तु इंधनयंत्रैरेव विद्युत् उत्पाद्यते । ततः किं सिद्धयेत् विद्युच्चलयंत्राणां संख्यावर्धतेन ?

एतैस्सवैः अपि यंत्रैः विद्युता वा इंधनेन वा चलितैः एकं अन्यत् अपि संकटं उत्पाद्यते, यद् कर्णकटु-कर्कश-हृदयभेदिध्वनयः धम् धम् फट् फट् ब्रवीति, किञ्चित् यंत्रं अन्यत्र तु फों फों फुम् खट् खट् करोति, किञ्चित् तु उच्चस्वरेण सीत्कारान् करोति, किञ्चित् धडधडायमानं प्रधावति । एते ध्वनयः अपि मानव - पशु-पक्ष्यादिकानां हृदयमस्तिष्कादीन् विकृतान् कुर्वन्ति । पाश्चात्यदेशेषु जापानादिदेशेषु कतिपये जनाः एभिः विकृतमानसाः अजायन्त इति कश्चित् ध्वनिशास्त्रविद् प्रतिपादयति ।

(अनुवर्तते)

# भाषाकुमारीणां विवादपरिहारः

ले० पं· पडाल ब्रह्मरेड्डि, कोङ्कुदुरु·

(पूर्वानुबन्धः)

## अथ तृतीयं दृश्यम्

(आसनस्थायाः भगवत्याः वाण्याः परितः हिन्दीतमिलाऽऽन्ध्रार्यभाषाकुमार्यः दृश्यन्ते ।)

सर्वाःभाषाकुमार्यः– भगवति, सादरमस्माकं प्रणामपरम्पराः स्वीक्रियन्ताम् ।

भगवती वाणी– वर्द्धध्वं यूयं सर्वा भाषाकुमार्यः । यूयं सर्वा अद्य किमर्थमत्र आगता वा, कथयत ।

तमिलभाषाकुमारी– इदानीं आंग्लभाषायां अपसृतायां भारते का भाषा प्रशासकीयभाषा भवितुं योग्येति ज्ञातुं वयं सर्वाः भाषाकुमार्यः सर्वज्ञायाः भगवत्याः अत्रभवत्याः सन्निकर्षमागताः स्मः । दक्षिणभारतस्य प्राचीनतमा भाषाऽहमेव साहित्यसम्पन्ना द्राविडसंस्कृतिसंरक्षिका च तत्पदवीमारोढुमर्हेति मम विश्वासः । किन्तु उत्तरभारतीयार्यभाषाणां प्रातिनिध्यं वहन्ती हिन्दी स्वल्पसाहित्याऽपि नातिप्राचीनाप्यहमेव योग्येति वदति । किञ्चान्ध्रभाषाऽप्यहमेवार्यद्रविडसंस्कृतिसंरक्षिका इति कथतन्ती कांक्षामात्मनः संसूचयति । अस्माकं विवादमपसार्य भवत्येव समुचितनिर्णयं कर्तुमर्हति ।

भगवती वाणी– युस्माकं समस्तोऽपि विवादः मया पूर्वमेव ज्ञात आसीत् । सर्वासु भारतीयभाषासु कस्याः भाषायाः शब्दाः

प्रभूतं वर्तन्ते; कस्याः प्राचीनभाषायाः साहित्यमेव युस्माकं साहित्यनिर्माणार्थं पोषकं मूलाधारञ्चासीत् अस्ति वा, सूचयत ।

आन्ध्रार्यभाषाकुमार्यौ– (किञ्चिदालोच्य) मृतभाषाऽपरनामधेयायाः संस्कृतभाषायाः, यस्याः इदानीमस्तित्वमेव नास्ति ।

भगवती वाणी– शान्तं पापम्, शान्तं पापम् । (सक्रोधं) कुतोऽस्तित्वं तस्याः नास्ति ? समीचीनतया तात्पर्यग्रहणे मृतशब्दः केवलमिदमेव सूचयति यदेषा संस्कृतभाषा तुरुष्कांग्लेयानां कुनीत्या साम्प्रतिके युगे प्रजानां व्यवहारभाषारूपेण न जीवति; किन्तु एषा देवभाषा सत्यं त्रिकालममृतं वर्तते। निरन्तरं नवनवरचनाभिः सा खलु सर्वत्र भारतवर्षे विद्वद्भिरादृता विराजते । सर्वासामेव भारतीयार्यभाषाणां जनन्याः संस्कृतभाषायाः भावाभिव्यञ्जनस्य नूतननिर्माणस्य च शक्तिरद्यापि अक्षुण्णा असीमा च वर्तत इत्यतो हेतोरद्यावधि नवविज्ञानादिशब्दनिर्माणनिरतैर्विद्वद्भिः प्रतिशतं नवनवतिशब्दान् संस्कृतादेव गृहीत्वा प्रान्तीयभाषासु विज्ञानस्य शास्त्राणां च पाठ्यपुस्तकानि रचितानि भाषान्तरीकृतानि च । आधुनिकभारतीयद्राविडभाषाणां ज्ञानधारा विचारधारापि संस्कृतेनैव प्रदत्ता ।

आन्ध्र– अहो ! संस्कृतस्य प्राणशक्तिः ।

भगवती वाणी– यदि संस्कृतं नास्ति, तदा भारतीयभाषाः कुत्र ? भारतीयसंस्कृतिः कुत्र? भारतीयसाहित्यं मनीषा च कुत्र? पुरुषार्थः परमार्थश्च कुत्र ? भारतीयसंस्काराणां, अनुष्ठानानां, पर्वणां, उत्सवानाञ्च समस्तसाधनोपासनानाञ्च जीवनकलायित्री वाणी संस्कृतमेवास्ति । धातवः, उपसर्गाः,

प्रत्ययादयः संस्कृतादेवोपलभ्यन्ते, येषामभावे अस्माकं भारतीयभाषाशब्दानां शुद्धव्युत्पन्नता कठिनैव न, अपि तु असम्भाव्याप्यस्ति ।

तमिल – प्राकृतभाषासमुद्भूतायाः संस्कृतभाषायाः छायाऽपि भारते केवलं मयि न पतिता । अहं मूर्धन्यवर्णानां प्रदात्री संस्कृतशब्दानां ग्रहणं ऋणविमोचनाय कृतवती ।

भगवती वाणी – (विहस्य) प्राकृतशब्देन मूलप्रकृतिदर्शनम्, संस्कृतशब्देन प्रकृतेः उपरि कृतसंस्कारात् सिद्धं संस्कृतरूपमिति बोद्धव्यम् । केचिद् विद्वद्वरिष्ठा वदन्ति यत् संस्कृतानां शिक्षितानां भाषा संस्कृतभाषेति व्युत्पत्तिरुचितेति । न केवलं आर्यभाषाणां, अपितु तव – तमिलाद्यन्यासामपि – नैकविधपोषणात् हेतोर्धात्रीव सा वर्तते । एतद्भाषानिबद्धग्रन्थान् अनुसृत्यैव कलान्तरे भाषान्तरेषु, त्वयि-तमिलभाषायामपि रामायणमहाभारताद्यनेकग्रन्थाः निबद्धाः साहित्यसृष्टिरपि आसीत्कृतः ।

तमिल – द्राविडभाषायामपि मयि आर्यभाषायाः संस्कृतभाषाया प्रभावः प्रभूतं पतित इत्यद्य खलु ज्ञातम् ।

भगवती वाणी – न त्वयि, एशियादेशे प्रचलितासु भाषासु च संस्कृतशब्दानां विशेषतो निवेशः समीक्ष्यते, प्रत्युत पाश्चात्यभाषाणामपि संस्कृतेन घनिष्ठसम्बन्धो वर्तत इति एतदेकांकरूपकरचयित्रा पं. पडाल ब्रह्मरेड्डिना गैर्वाण्याः १९६४ वर्षस्य अङ्कद्वये 'संस्कृतरष्यन्भाषयोः समानता' 'संस्कृतांग्लभाषयोर्विशिष्यसाम्यम्' इति लेखद्वये सोदाहरणं निरूपितं आसीत् खलु ।

तमिल – संस्कृतभाषा स्वस्य आर्यभाषात्वाद् द्राविड़संस्कृतेः संरक्षिका कथं भवेदित्येवाशङ्क्य आत्मनः प्रशासकीय-भाषाकांक्षां व्यक्तीकरोमि ।

भगवती वाणी – द्राविडार्यसंस्कृतिद्वयसम्मिलितरूपा एव खलु भारतीयसंस्कृतिर्नाम । इदानीं पृथक् द्राविडसंस्कृतिः कुत्र ? आर्यसंस्कृतिश्च कुत्र ? शिवकालिकादिदेवतोपासनाप्रथा कस्य ? द्राविडानामेव । आर्यदेवताभिः शिवकालिकादि-देवतानामपि सम्मेलनमभवत् भारतीयसंस्कृते । दण्डि-भारवि - भट्टोजीदीक्षितादिदाक्षिणात्याः संस्कृतसाहित्यस्य पुष्टिं किमर्थमकुर्वन् ? किञ्च, संस्कृतभाषा हि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च विभिन्नसम्प्रदायैः । बौद्धमतप्रवर्तकस्य 'बुद्ध' इति नाम । तस्य मतस्य च बौद्धं इति नाम किं संस्कृते स्वमतप्रचारानुकूल्यञ्च नोद्घाटयति? किं संस्कृते वेदविरुद्धमतावलम्बिनां बौद्ध, जैन, चार्वाकानां धार्मिकग्रन्थाः न विरचिताः ? प्रायेण सर्वेषामपि भारतीय-सम्प्रदायानां धार्मिकवाङ्मयस्याधाररूपा संस्कृतभाषेति मन्तव्यम् ।

आन्ध्र – संस्कृतभाषा आधुनिकभावानां व्यक्तीकरणेऽसमर्थेति द्राविडार्यवर्गसम्बन्धिताऽहं प्रशानकीयभाषारूपेण कुतो न वरणीया ?

(सशेषम्)

# श्रीपारिजातापहरणकाव्यम्

ले० श्री. न. च. वेंकटताताचार्यः, विशाखपट्टणम्.

(पूर्वानुबन्धः)

एकं हि वत्सरमिदं तव केशपाशे
स्थित्वा पुनर्व्रजति नाकतले स्वकीयम् ।
वृक्षं लताङ्गि! तरसा न हि तत्र शङ्का
तस्मादिदं प्रियतया तव मूर्ध्नि धार्यम् ॥

सर्वाणि नारदवचांसि निशम्य चेटयः
सात्राजितीप्रभृतिकाः सकलाः सपत्नीः ।
ऊचुर्यथावदिह वृत्तमभूतपूर्वं
सर्वाश्च मौनमभजन्त विनैव सत्याम् ॥

चेटीसमागमविलम्बनहेतुमेव
सत्या विचिन्त्य नितरां हृदि तापमाप ।
उद्यानभूमिमुपगम्य सखीसमेता
शौरेर्गुणान् कथयितुं ललना प्रवृत्ता ॥

क्रोशन्मयूरनिनदैः निबिडीकृतेऽस्मिन्
भृङ्गावलीविरुतमञ्जुलभूमिभागे ।
पद्माकरात् वहति शीतलगन्धवाहे
चित्ते मनागपि सुखं तरुणी न लेभे ॥

कान्ते! मदीयमपसव्यविलोचनं तत्
अत्यन्तमेव सपदि स्फुरतीति हेतुः ।
न ज्ञायते मम पतिः कुरुतेऽनुरागम्
कुत्रापि तत् प्रियजने करुणाविहीनः ॥

इत्थं यदा सत्यवती बभाषे
तदा समागत्य जगाद चेटी ।
किं वच्मि कान्ते ! कलहाशनोऽयं
श्रीरुक्मिणीगेहगतं मुरारिम् ॥

प्रणम्य तस्मै वरपारिजातं
दिशन् जगादैवमहो मुनीन्द्रः ।
अवैषि किं तत्कुसुमप्रभावम्
सुरेतरैराप्तुमिदं न शक्यम् ॥

आदाय पुष्पं तरसा मुरारिः
प्रणम्य तं साधु मुनिं ददौ तत् ।
विदर्भजायै सहसा प्रसूनं
तच्चापि कान्ता निदधे स्वकेश्ये ॥

सद्यो रराज ललना परिपूर्णचन्द्र–
बिम्बं यथा विमलनूतनकान्तियुक्ता ।
पुष्पेषुशस्त्रमिव संप्रति शाणघृष्टं
तत्पारिजातसुमसंभरणप्रभावात् ॥

सोऽयं जगाद किल नारदमौनिवर्यः
श्रीरुक्मणीसहितकंसरिपौ तथा च ।
शृण्वत्सु मय्यपि च सत्यवतीस्मयस्तु
नश्येन्नितान्तमिह सुन्दरताप्रयुक्तः ॥

श्रुत्वा तदीयवचनानि बभूव सत्या
यष्टिप्रहारमनुभूतवतीव नागी ।
आज्यप्रसारवशतो ज्वलितेव हेतिः
वह्नेरिवाशु नयनारुणतामवाप ॥

किं तत्र नारदमहामुनिरागतो वा
आगत्य तानि वचनानि जगाद किं वा ।
तूष्णीं बभूव किमु तानि निशम्य कृष्णः
सा रुक्मिणी च किमुवाच वदाशु कान्ते ॥

अत्यन्तदुर्लभमिति प्रसवं मुनीद्रः
कृष्णाय यच्छतु ददातु हरिः प्रियायै ।
किं त्वत्र दुर्मदपरीतमुनिर्मदीय–
नामग्रहे कमाधिकारमसौ लभेत ॥

यस्यान्नमासीत् कलहस्सदैव
लोकत्रये संचरतो मुनेस्तत् ।
संभाषणं वारयितुं समर्थः
कस्मान्न यत्नं विदधे मुरारिः ॥

न दोषलेशोऽ स्ति मुनेरमुष्य
जग्राह पुष्पं तरुणी कुतस्तत् ।
तस्यैव दोषः खलु गोपसूनोः
यस्मादयं मौनमुपेत्य तस्थौ ॥

न वेत्तुमर्हन्ति निजप्रवृत्तिं
वदन्ति नारीहृदयं हि दष्टम् ।
शरद्घनौघप्रकटप्रचाराः
नराः न विश्वासपदं भवन्ति ॥

चिरात् सपत्नीनिवहे किलाहं
अग्रेसरत्वं दधती नितान्तम् ।
प्रेमास्पदं भर्तुरहं व्यराजं
तासां भवाम्यद्य लघुः प्रकामम् ॥

ममैव दाक्षिण्यवशात् प्रियोऽयम्
छलेन नैजप्रियतां प्रदर्श्य ।
विदर्भपुत्र्यां अतिमात्ररागं
बबन्ध कृष्णः किल वञ्चकोऽयम् ।।

ददौ किलैकं प्रसवं मुनीन्द्रः
कृष्णाय, सोऽयं प्रददे प्रियायै ।
निशम्य तद्वाक्यमहं वहामि
प्राणान् शरीरे प्रविहाय लज्जाम् ।।

तस्याः गृहे स्थितिवशात् किल शौरिरस्यै
पुष्पं ददाविति समञ्जसमेव भाति ।
अस्माकमस्य निकटं चलितुं प्रवृत्ता
लज्जा नितान्तमधुना न जहाति कान्ते !

आविद्धरत्ननिचये वरसूत्ररीत्या
तस्यैव चेतसि निरन्तरवर्तनेन ।
कालं नयामि सुमहान्तमहं लताङ्गि!
तादृग्विधं पतिमवाप्नुयुरेव धन्याः ।।

स्वप्ने न मे वचनमेव निराकरोति
प्रत्यग्रवस्तुनिचयं प्रथमं न दत्वा ।
मह्यं न दित्सति किलान्यजनेभ्य एव
चेटीजनं वशयति प्रसभं धनाद्यैः ।।

पैशुन्यसंकथनभीतमना नितान्तं
उत्कोचदानविधिभिर्नितरां मुरारिः ।
चेटीजनं वशयते प्रचुरैर्धनाद्यैः
एतादृशो मम पतिः कथमेवमासीत् ।।

(अनुवर्तते)

# धर्मैकता न हृदयाः पुरुषोत्तमपंडिताः

ले० श्री सामवेदं श्रीराममूर्तिः, काकिनाडा.



विदितमेवैतद्विश्वेषामास्तिकानाम् यदार्षविद्याभूषण–बिरुद-मन्वर्थयन्तः ब्रह्मश्रियः जटावल्लभुल पुरुषोत्तम महोदयाः बहोः कालात् प्रभृति भारतीयसंस्कृते स्समुद्धरणाय निरुपमां निर्विरामां च कृषिं कुर्वन्तीति ।

आर्षविद्याभूषणशब्दः षष्ठीतत्पुरुषो वा बहुव्रीहि र्वा इति संदिहानाः केचन दृश्यन्ते । उभयधाप्यन्वयस्समीचीन एवेति ममाशयः, यतः आर्षविद्याः एतैर्भूषिताः, एते च ताभिरिति साधारणोयं भूषणभूष्यभावः ।

## धर्मप्रचारः

ऐहिकसुखस्य वा आमुष्मिकश्रेयसो वा प्रधान – साधनं धर्माचरण मेवेत्यत्र न कश्चिद्विशयलेशः । स च धर्मः वेदप्रतिपादितः ऋषिभिः प्रवर्तितः सनातनधर्म एवेति निश्चप्रचम् । परन्तु काल-दोषवशाद्वा पाश्चात्यसंस्कारप्रभावाद्वा मेधाविनोपि भारतीयाः विपरीतबुद्धयः कुतर्कवशंवदीभूतचित्ताः स्वधर्मविमुखा आसन् ।

वेदशास्त्राभ्यासे निरुत्साहः, गीर्वाणवाण्यां तिरस्कारः, म्लेच्छप्रायता च सर्वत्र प्रचुरता मगमत्। एतादृशीम् दुःस्थितिम् समाकलय्य श्री पुरुषोत्तमाः नितरां खिन्ना भूत्वा भारतीयसनातनधर्मप्राशस्त्यप्रचाराय बद्धकंकणा अभवन्। ततः प्रभृति वैदिकधर्मप्राशस्त्यप्रतिपादकानि बहूनि ग्रन्थरत्नानि व्यरचयन्। निखिलेपि देशे नगरे नगरे ग्रामे ग्रामे गाङ्गझरीसदृशवाग्धोरण्या परस्सहस्रान् धर्मोपन्यासा नकार्षुः। तद्ग्रन्थपठनेन उपन्यासश्रवणेन च अनेके नराः भ्रान्तिनिर्मुक्ताः आर्षधर्ममहत्तां सम्यक् अजानन्। केचन अज्ञानेन गृहीतपूर्वात् मतांतरात् प्रतिनिवृत्ताः पुनस्स्वमते प्रविष्टाश्च। किं बहुना? बहुकालात् बहुभिः पीठाधिपतिभिः तादृशो धर्मप्रचारो न कृतः, यादृशः एतै रसहायशूरतया परिमितकाले साधित इयत्र न काप्यतिशयोक्तिः।

## धर्मशास्त्रप्रचारः

यद्यप्यस्मद्देशे संस्कृतविद्वांसः अनेके सन्ति। धर्मशास्त्रविज्ञातारः धर्मसंदेहनिराकरणचणाः वा विरलाः। इमं लोपं निवारयितुं ते प्रतिसंवत्सरं ग्रीष्मकाले (विद्यालयविरामसमये) धर्मशास्त्रपाठशालाः सुप्रसिद्धनगरेषु पर्यायेण संस्थाप्य प्रसिद्धपण्डितैः धर्मशास्त्रबोधनं कारयित्वा बहून् विदुषः धर्माभिज्ञा नकुर्वन्। लुप्तप्राया मधर्वश्रुतिरूपां गंगा मान्ध्रदेशमानीय संरक्षितुम् एतैर्भागीरथो यत्नः कृतः। अहो! तेषामधमर्णोय मस्तिकजनः।

## कुलपतित्वम्

कोव्वूरु आध्रगीर्वाणविद्यापीठे चिरमद्यक्षपदवीम्, आङ्गलकलाशालासु आचार्यपदं च अधिष्ठाय असंख्यान् छात्रान् संख्यावतः

कृत्वा तद्वारापि साहित्यस्य धर्मस्य महतीं सेवा मकुर्वन् । अतः इमे कुलपतिपदभाजो भवितुमर्हन्तीत्यत्र न कापि विप्रतिपत्तिः । एषाम् शिष्याः बहवः इदानी माचार्ययकम् निर्वहन्ति, अतः इमे प्राचार्याः इत्यपि वक्तुम् सुशकम् ।

## संस्कृतप्राणता

आर्षसंस्कृतौ एतेषां यादृशी द्रढीयसी श्रद्धा ततोपि विशिष्टा संस्कृतभाषायां आसक्तिः, यतः संस्कृतं विना सनातनी संस्कृतिस्संभावयितुमपि न शक्या । ये आर्षधर्मस्य विकास मभिलषन्ति ते संस्कृतभाषाविकासाय अपि अवश्यम् प्रयतेरन्निति सर्वदा सर्वधा च उद्धुष्यन्ति । सन्तु नाम बह्वचः भाषाः प्रपञ्चे; विलसन्तु च रम्याणि साहित्यानि, परन्तु रम्यं धर्म्यं च साहित्यं गैर्वाण्या मेव समुपलभ्यते नान्यत्रेति एते पदे पदे सोदाहरणं विवृण्वन्ति ।

## विविधसंस्थानिर्वाहकत्वम्

अस्मद्देशे असंख्या धार्मिकसंस्थाः साहित्यसंघाश्च एतेषां निर्वाहकताभाग्यम् प्राप्य विराजन्ते । केन्द्रविश्वहिन्दूपरिषदि कार्यनिर्वाहकसभ्यता, आन्ध्रप्रान्तीयविश्वहिन्दूपरिषदध्यक्षता, वेदशास्त्रसंरक्षकसमिते राध्यक्ष्यम्, श्री तिरुमलतिरुपतिदेवस्थानस्थापिते हिन्तूधर्मप्रतिष्ठापनसंघे कार्यनिर्वाहकसभ्यत्वम्, आन्ध्रप्रदेशप्रभुत्वनिर्णीत – प्राच्यभाषोद्धरणसमितौ सभ्यत्वम् इत्यादीनि बहूनि गणनीयानि तेषां कार्यकौशलस्य धर्माभिनिवेशस्य च निदर्शनानि । एतैः स्थापिता प्रचालिता च आन्ध्रराष्ट्रब्राह्मणमहासभा प्रसिद्धैव ।

काकिनाडापुरे सांस्कृतिकोज्जीवनम्

यद्यपि काकिनाडपुरे वदान्यानां धर्मश्रद्धालूनां च लोपो नास्ति, तथापि सांस्कृतिकचैतन्यविषये विजयनगर–राजमहेन्द्रवराद्यपेक्षया हीनदशायां पुरमिदं वर्तते इत्यस्मादृशां महती चिन्ता विद्यते स्म। परन्त्वेतन्नगरवास्तव्यानां भागधेयवशात् श्री पुरुषोत्तममहाशया उद्योगविरताः अत्रैव स्थिरनिवास मादृतवन्त इति ज्ञात्वा अस्मादृशानां मनांसि हर्षोत्फुल्लानि समभवन्। एतेषां सान्निध्यम् नैव वृथा भवतीत्यस्मदीयः विश्वासः अचिरादेव फलान्यपश्यत्। एतेषां प्रोत्साहेन श्री वेणुगोपालसंस्कृतप्रचारसभा इत्येका संस्था स्थापिता। सा च श्री जगद्गुरु कामकोटि पीठाधीश्वराणा माशीर्वादबलेन प्रतिदिनप्रवर्धमाना महतीं सेवां करोतीत्यपरोक्षमिदमत्रत्यानाम्। एतत्सभापक्षेण आदौ एका संस्कृतपाठशाला समारब्धा। क्रमेण स वदान्यशेखराणां श्री पैण्डा वंश्यानां पोषणमासाद्य पुरुषोत्तमसंकल्पप्रभावेण कलाशाला अभूत्। सैव पैण्डा सत्यनारायणसंस्कृतविद्यापीठमिति अद्यव्यवह्रियते। अपि च श्री वेणुगोपालसंस्कृतसभा पर्यवेक्षणे एका वेदस्मार्तपाठशाला, तिस्रः रात्रिसंस्कृतपाठशालाश्च जगन्नाथपुरे, आंजनेयदेवालये, ईश्वरपुस्तकभाण्डागारे च प्रचलन्ति। दिवा विविधवृत्तिनिमग्ना अपि ये संस्कृतं शिक्षितु मभिलषन्ति तेषां सौलभ्याय रात्रिपाठशालानां स्थापनं कृतम्। श्रौतविद्यापेक्षया अपि स्मार्तविद्या हैन्दवजीवनस्यात्यन्तमावश्यकीति तेषां दृढोऽभिप्रायः। अतः सर्वेऽपि द्विजाः विशिष्यपुरोहितवृत्तिनिष्ठाः अवश्यं स्मार्तविद्यानिष्णाताः भवेयुरिति परीक्षाक्रमोऽपि तत्र तत्र प्राचाल्यत।

## अन्यच्च प्रचारसभापक्षेण नगरे

रामारावुपेटस्थ ईश्वरपुस्तकभाण्डागारे प्रतिभानुवासरम्, जगन्नाथपुरे शिवालये प्रतिस्थिरवासरं च संस्कृतविद्वद्गोष्ठी निर्वर्त्यते । यत्र बहुभिः पण्डितैः अमूल्या उपन्यासा मतधर्मसारस्वतादिविषयकाः वहुकालात् कृताः, क्रियन्ते च । इदमत्रावश्यमभिधेयम् – प्रचारसभाकार्यक्रमेण संतुष्टाः पौराः पुरपालकसंघाधिकारिणः विविध बाँक्निर्वाहकाश्च अन्याः संस्थाश्च सभानिर्वहणाय पर्याप्तं धनसाहाय्यं कुर्वन्ति । एतया अनन्यादृश्या कृष्या नगरे सर्वत्र अदृष्टपूर्वं विशिष्टं सांस्कृतिकचैतन्यम् अर्थवितरणे समुत्साहातिशयश्च प्रजासु समुल्लसतीति महदिदं प्रमोदस्थानम् । स्वप्रतिष्ठापितताया एतत्प्रचारसभायाः पुरुपोत्तमाः शाश्वताध्यक्षाः ।

## रचनापाटवम्

एते संस्कृतान्ध्रांग्लभाषासु तिसृष्वपि यथा उपन्यासे दक्षाः तथैव ग्रन्थरचनायामपि पटिष्ठाः । एभिरनेके ग्रन्थाः, बहुगहनविषयपरिशोधनपुरस्मरं रचिताः अत्यन्तसरलसुबोधभाषायाम् । निसर्गकर्कशः शास्त्रविषयोपि एषां रसनायां, रचनायां च शिरीषपेशलो भूत्वा श्रोतॄणां पाठकानां च हृदि गाढं प्रविश्य विलक्षणं विकासमानन्दं च जनयतीति सर्वानुभवसाक्षिकमेतत् ।

श्रुतिस्मृतिपुराणशास्त्रसाहित्यादिविषयेषु तलस्पर्शिज्ञानसंपन्नैरेतैः रचितानां ग्रन्थानां विशिष्टतां वर्णयितुं मादृशस्य नास्ति शक्तिः । तस्मिन् कार्ये दक्षाः विचक्षाणाः अनेके सन्ति । तैः प्रणीतं चित्रशलकमुद्दिश्य किंचिन्मया निवेद्यते ।

चित्रशतकम्

उदितमात्रमिदं शतकं देशे बहुभिः विद्वत्तल्लजैः प्रशंसितम्, अनूदितं चांध्रभाषायां अनेकैः कविशिरोमणिभिरहमहमिकया, इतीदं एव अलं अस्य प्राशस्त्यप्रख्यापनाय। प्रतिभाव्युत्पत्तिभ्यां साकं कवेरावश्यकं लोकवृत्तपरिज्ञानमेषां सुसमृद्धमिति स्पष्टीकरोति शतकमिदम्। उदात्तभावबंधुरमपीदं सरलशैल्या ललितललितपदजालेन प्रसन्नतया विराजते।

श्रीपुरुषोत्तममहाशयाः देशाटनं कुर्वन्ति, उपन्यासान् वितन्वन्ति, ग्रन्थान् रचयन्ति, व्यासान् प्रकटयन्ति, विविधधर्मसंस्था निर्वहन्ति, अवसरे परिपालकानां हितमुपदिशन्ति, छात्रानध्यापयन्ति, पण्डितानाद्रियन्ते, कवीन् प्रोत्साहयन्ति। एवं सर्वदा सर्वथा च निर्विरामां कृषिं कुर्वन्ति। परन्तु तेषामेताः सर्वाः प्रवृत्तयः सनातनभारतीयधर्मसंरक्षणार्था एवेति धर्मैकतानहृदयाः पुरुषोत्तमपण्डिताः इति दृढं विश्वसिमि।

"धर्मो रक्षति रक्षितः"



# आगामि विरोधिकृदुत्तरायण परीक्षाणां कार्यक्रमसूची

| विना विलंबशुल्कं आवेदनपत्र-प्रापणान्तिमतिथि: | प्रत्येकं 50 पै बिलंबशुल्केन साकं आवेदनपत्र-प्रापणान्तिमतिथिः | परीक्षातिथयः |
|---|---|---|
| 20—1—72 | 31—1—72 | कोविदः मार्च 11, 12 & 13 |
| | | समर्थः ,, 11 & 12 |
| | | विचक्षणः ,, 11 & 12 |
| | | अभिज्ञः ,, 12 |
| | | परिचयः ,, 12 |

विना मूल्यं पूरणीयानि आवेदनपत्राणि लभ्येरन्, परन्तु पोस्टलव्ययार्थं आवश्यकाः पोस्टलचीटिका अभ्यर्थिभिः प्रेषणीयाः। अवेदनपत्रैः साकं शुल्कप्रेषणादिविवरणसहितो लेखः अवश्यं प्रेषणीयः। आवेदनपत्रेषु च उचितस्थले स्वोत्तीर्णपरीक्षायाः संवत्सरः क्रमसंख्या च अथवा विशेषणानुमतिसद्भावे तस्याः क्रमसंख्या वा अवश्यं लेखनीयाः। सर्वस्मिन् पत्रव्यवहारे—

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आ. प्र.)

इत्येव लेखनीयं। नामनिर्देशेन वा नैव धनादिकं प्रेषणीयम्। प्रत्युत्तरकांक्षिभिः तद्योग्याः पोस्टलचीटिका अपि प्रेषणीयाः। अन्यथा प्रत्युत्तरं नैव लभ्येत।

इति

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आ० प्र०)

**की. श्रीनिवासाचार्यः,**
परीक्षामन्त्री.
१५-१२-७१.



# विरोधिकृद्दक्षिणायनपरीक्षासु सर्वप्रथमतया उत्तीर्णाः



विचक्षणः
एस्. वेंकटरमणिः
मदुरै–बी.



अभिज्ञा
ए. कमलम्
मदुरै–बी.



परिचयः
जे. वैद्यनाथः, श्रीरंगम्.